॥ श्रीगणेशाय नमः ॥

अथ

# श्रीगणेशपूजापद्धतिः

## प्रारभ्यते

पण्डित श्रीभगवान्दत्तेन सङ्गृहीता।

पण्डित श्रीचन्द्रभानुशास्त्रिणा संशोधिता।

तस्या अयं स्वस्तिपुण्याहवाचनादिनान्दीश्राद्धान्तो द्वितीयोभागः।

सेयं रामगढ़निवासिपोद्दारवंशावतंस-

श्रीकेशवदेवश्रेष्ठिवर्येण

धार्मिकजनोपकाराय निजद्रव्यव्ययेन मुद्रयित्वा

विना मूल्यं वितीर्णा।

ये तु मूल्यं विना ग्रहीतुं नेच्छन्ति ते समुचितमूल्यव्ययेन प्राप्तुं पारयन्ति।

प्रथमवार ५००० } संवत् १९९२ वि० { सन् १९३६ ई०

पं० प्यारेलाल शास्त्री के प्रबन्ध से धर्मप्रेस मेरठ में मुद्रित

* श्रीः *

# प्रारम्भिक वक्तव्य

ऐसा कोई भी माङ्गलिक धार्मिक कार्य नहीं होगा जिसमें श्रीगणेश भगवान् के पूजन की आवश्यकता न पड़ती हो। निर्विघ्नता की सिद्धि के लिये सभी माङ्गलिक कार्यों में श्रीगणेश पूजन होता है। इस कारण गणेशपूजन सब धार्मिक कार्यों में मुख्य है। इतना होने पर भी श्रीगणेश भगवान् के पूजन की पृथक् पद्धति अब तक कोई नहीं छपी। जो कोई हैं भी उनमें मन्त्रों के केवल प्रतीकमात्र दे रक्खे हैं। वह उन्हीं के काम आ सकती हैं जिन्हें पूजा के सब मन्त्र पूरे पूरे कण्ठस्थ हैं। जिन्हें मन्त्र कण्ठ नहीं उन्हें इस कर्म के करने में बड़ा ही कष्ट होता है। इस कष्ट को दूर करने के लिये श्रीमान् सेठ केशवदेव जी पोद्दार ने इस पुस्तक का संग्रह करवा कर प्रकाशित किया है। इसमें सब मन्त्र पूरे पूरे लिखे हैं, किसी भी मन्त्र का प्रतीक-मात्र नहीं उद्धृत किया है। इससे यह पुस्तक कर्म करने-कराने वालों के लिये बहुत ही उपयोगी बन गई है। इसी कारण यह धर्मार्थ वितरण की जा रही है। जो सज्जन विना मूल्य न लेने का सङ्कल्प रखते हों उनसे उचित मूल्य लेकर पुस्तक भेज दी जायेगी। यदि इससे कुछ लोकोपकार सिद्ध हुआ तो इसके बाद कर्मकाण्ड की और छोटी छोटी पुस्तकें जो संगृहीत कर रक्खी हैं उन्हें प्रकाशित कराकर धार्मिक जनता की भेंट करेंगे। ॐ तत्सत्।

* श्रीः *

# अथ श्रीगणपतिपूजापद्धतौ पुण्याहवाचन-प्रयोगः ।



अथ यजमानः पुण्याहवाचनकलशं हस्तेन स्पृष्ट्वा प्रार्थयेत् । अथ प्रार्थनामन्त्रः—

पाशपाणे ! नमस्तुभ्यं पद्मिनीजीवनायक ! ।
पुण्याहवाचनं यावत्तावत्त्वं सन्निधौ भव ॥१॥

इति सम्प्रार्थ्य, अवनिकृतजानुमण्डलो यजमानः कमलमुकुल-सदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना पुण्याहवाचनकलशं धारयित्वा आशिषः प्रार्थयेत् ।

यजमानः— दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ।
तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ।

विप्राः— अस्तु दीर्घमायुः ।

ॐ त्रीणि पदा विचक्रमे विष्णुर्गोपाऽअदाभ्यः
अतो धर्म्माणि धारयन् ।

तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु इति भवन्तो ब्रुवन्तु इति यजमानो वदेत् ।

पुण्यं पुण्याहं दीर्घमायुरस्तु इति द्विजा ब्रूयुः। ततः पुण्याह-वाचनकलशं भूमौ निदध्यात्। अथ पुनः पूर्वोक्तविधिना कलशं दक्षिण-पाणिना गृहीत्वा दीर्घमायुः प्रार्थयेत्। एवं वारत्रयं सम्प्रार्थयेत्।

ब्राह्मणानां हस्ते सुप्रोक्षितमस्तु।

ॐ शिवा आपः सन्तु,

अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम्।
ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु मे ॥२॥

इति मन्त्रेण यजमानो ब्राह्मणानां हस्ते किञ्चिज्जलमर्पयेत्। ततश्च ब्राह्मणाः सन्तु शिवा आप इति प्रत्याशिषं प्रयुञ्जीरन्। एव-मग्रेऽपि यजमानो ब्राह्मणानां हस्ते पुष्पादिकमर्पयन् तास्ता आशिषः प्रार्थयेत्। ब्राह्मणाश्च प्रत्याशिषं दद्युरिति सर्वत्र क्रमो बोध्यः। तद्यथा—

यजमानः— ॐ सौमनस्यमस्तु।

लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे।
सामे वसतु वै नित्यं सौमनस्यं तथास्तु नः ॥३॥

इति मन्त्रेण पुष्पाणि ब्राह्मणानामञ्जलौ निवेदयेत्।

ब्राह्मणाः— अस्तु सौमनस्यम् इति प्रत्याशिषं दद्युः।

यजमानः— ॐ अक्षतञ्चारिष्टञ्चास्तु।

अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशोबलम् ।
यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम ॥४॥

इत्यक्षतान् ब्राह्मणानां हस्तयोरर्पयेत् ।

ब्राह्मणाः— ॐ अस्त्वक्षतमरिष्टं चेति प्रत्याशिषं दद्युः ।

यजमानः— ॐ गन्धाः पान्तु इति चन्दनं ब्राह्मणानां हस्ते दद्यात् ।

ब्राह्मणाः— सुमङ्गल्यञ्चास्त्विति प्रत्याशिषं दद्युः ।

यजमानः— ॐ अक्षताः पान्तु इति ब्राह्मणानां हस्तेऽक्षतान् दत्वाऽशिषं प्रार्थयेत् ।

ब्राह्मणाः— ॐ आयुष्यमस्त्विति प्रत्याशिषं दद्युः ।

यजमानः— ॐ पुष्पाणि पान्तु इति पुष्पाणि दत्वा प्रार्थयेत् ।

ब्राह्मणाः— ॐ सौश्रियमस्त्विति प्रत्याशिषं दद्युः ।

यजमानः— ॐ सफलताम्बूलानि पान्तु ।

ब्राह्मणाः— ॐ ऐश्वर्यमस्तु ।

यजमानः— ॐ दक्षिणाः पान्तु इति हिरण्यं ब्राह्मणानां हस्ते दत्वा प्रार्थयेत् ।

ब्राह्मणाः— ॐ बहुदेयञ्चास्त्विति ब्रूयुः ।

यजमानः— ॐ पुनरर्घाः पान्तु ।

ब्राह्मणाः— ॐ स्वर्चितमस्तु ।

यजमानः— ॐ दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनञ्चायुष्यञ्चास्तु ।

ब्राह्मणाः— ॐ अस्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनञ्चायुष्यञ्चेत्युक्त्वा यजमानं मूर्द्धन्यभिषिञ्चेयुः ।

यजमानः— ॐ यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुः सामाशीर्वचनं बह्वृषिमतं समनुज्ञातं तदहं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये ।

ब्राह्मणाः— ॐ वाच्यताम् ।

ततो यजमानो ब्राह्मणानां हस्तेष्वक्षतान् दद्यात् । ते चाशिषो दद्युः । तत्राशीर्मन्त्राः ।

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाऽक्ष-भिर्य्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाᳬंसस्तनूभिर्व्व्यशेमहि देवहितं यदायुः ॥१॥

देवानाम्भद्रा सुमतिर्ऋजूयतान्देवानाᳬंरातिरभिनो निवर्त्तताम् । देवानाᳬंसख्यमुपसेदिमा-व्वयं देवा न आयुः प्रतिरन्तु जीवसे ॥२॥

न तद्रक्षा ॑ंसि न पिशाचास्तरन्तिदेवा-
नामोजः प्रथमजं ॑ह्येतत् । यो विभर्त्तिदाक्षायणं ॑
हिरण्यं ॑ स देवेषु कृणुते दीर्ग्घमायुः स मनुष्येषु
कृणुते दीर्ग्घमायुः ॥३॥

दीर्ग्घायुस्त ओषधे खनिता यस्मै च त्त्वा खना-
म्म्यहम् । अथो त्त्वं दीर्ग्घायुर्ब्भूत्त्वा शतवल्शा
व्विरोहतात् ।

द्रविणोदा द्रविणसस्तुरस्यद्रविणोदाः सनरस्य
प्प्रयं सत् । द्रविणोदा व्वीरवतीमिशन्नो द्रविणोदारा-
सते दीर्ग्घमायुः ।

सविता पश्श्चात्तात्सविता नः पुरस्तात्सविता-
त्तरस्तात्सविताधरस्तात् । सविता नः सुवतु सर्व्वतातिं
सविता नो रासतां दीर्ग्घमायुः ।

नवो नवो भवति जायमानोह्नां केतुरुषसामेत्त्य-
ग्रम् । भागं देवेब्भ्यो विदधात्त्यायन् । प्रचन्द्रमास्तिरते
दीर्ग्घमायुः ।

उच्चा दिवि दक्षिणावन्तोऽअस्थुर्येऽअश्वदाः सूर्य्येण । हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्रतिरन्त आयुः । इत्याशीर्वादमन्त्राः ।

ततोयजमानः—

व्रतजपनियमतपःस्वाध्यायक्रतुशमदमदयादान-विशिष्टानां सर्वेषां ब्राह्मणानां मनःसमाधीयतामिति प्रार्थयेत् ।

ॐ समाहितमनसः स्मः । इति ब्राह्मणा वदेयुः ।

ॐ प्रसीदन्तु भवन्तः । इति यजमानो वदेत् ।

ॐ प्रसन्नाःस्मः । इति ब्राह्मणा वदेयुः ।

एव मेवाऽग्रेऽप्याशिषं यजमानः प्रार्थयेत् । तस्मै प्रत्याशिषं च ब्राह्मणा वदेयुः । तत्र विधिः— पुण्याहवाचनकलशात्पञ्चपात्रे जलमादाय ब्राह्मणा दूर्वाकाण्डैर्यजमानमभिषिञ्चन्त एकस्मिन् पात्रेप्रतिमन्त्रं दूर्वादलैर्जलं प्रतिषिञ्चेयुः ।

तद्यथा—

ॐ शान्तिरस्तु, इति यजमानः प्रार्थयेत्

ॐ अस्तु शान्तिरिति प्रत्याशिषं प्रयुञ्जाना

## ब्राह्मणा एकस्मिन् पात्रेऽभिषेकं कुर्युः

यजमानः— ॐ पुष्टिरस्तु

ब्राह्मणाः— ॐ अस्तु पुष्टिः

यजमानः— ॐ तुष्टिरस्तु ।

ब्राह्मणाः— ॐ अस्तु तुष्टिः ।

यजमानः— ॐ वृद्धिरस्तु ।

ब्राह्मणाः— ॐ अस्तु वृद्धिः ।

यजमानः— ॐ अविघ्नमस्तु ।

ब्राह्मणाः— ॐ अस्त्वविघ्नम् ।

यजमानः— ॐ आयुष्यमस्तु ।

ब्राह्मणाः— ॐ अस्त्वायुष्यम् ।

यजमानः— ॐ आरोग्यमस्तु ।

ब्राह्मणाः— ॐ अस्त्वारोग्यम् ।

यजमानः— ॐ शिवमस्तु ।

ब्राह्मणाः— ॐ अस्तु शिवम् ।

यजमानः— ॐ शिवं कर्माऽस्तु ।

ब्राह्मणाः— ॐ अस्तु कर्म शिवम् ।

यजमानः— ॐ कर्मसमृद्धिरस्तु ।

ब्राह्मणाः— ॐ अस्तु कर्मसमृद्धिः ।

यजमानः— ॐ धर्मसमृद्धिरस्तु ।

ब्राह्मणाः— ॐ अस्तु धर्मसमृद्धिः ।

यजमानः— ॐ वेदसमृद्धिरस्तु ।

ब्राह्मणाः— ॐ अस्तु वेदसमृद्धिः ।

यजमानः— ॐ शास्त्रसमृद्धिरस्तु ।

यजमानः— ॐ धनधान्यसमृद्धिरस्तु ।

यजमानः— ॐ पुत्रपौत्रसमृद्धिरस्तु ।

यजमानः— ॐ इष्टसम्पदस्तु ।

यजमानः— ॐ अरिष्टनिरसनमस्तु ।

यजमानः— ॐ यत्पापमरोगमशुभमकल्याणं तद् दूरे प्रतिहतमस्तु ।

यजमानः— ॐ यच्छ्रेयस्तदस्तु ।

यजमानः— ॐ उत्तरोत्तरे कर्मणि निर्विघ्नतास्तु ।

यजमानः— ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ।

यजमानः— ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् ।

ब्राह्मणाः— ॐ सम्पद्यन्तामुत्तरोत्तराः क्रियाः शुभाः शोभनाश्च ।

यजमानः— ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसम्पदस्तु ।

यजमानः— ॐ तिथिकरणमुहूर्तनक्षत्रग्रहल   धदेवताः प्रीयन्ताम्।

यजमानः— ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे सलग्ने साधि-
देवते प्रीयेताम्।

यजमानः— ॐ दुर्गापाञ्चाल्यौ   येताम्।

यजमानः— ॐ अग्निपुरोगा देवगणाः प्रीयन्ताम्।

यजमानः— ॐ वशिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम्।

यजमानः— ॐ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम्।

यजमानः— ॐ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम्।

यजमानः— ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम्।

यजमानः— ॐ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम्।

यजमानः— ॐ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम्।

यजमानः— ॐ श्रीसरस्वत्यौ प्रीयेताम्।

यजमानः— ॐ श्रद्धामेधे प्रीयेताम्।

यजमानः— ॐ भगवती कात्यायनी प्रीयताम्।

यजमानः— ॐ भगवती माहेश्वरी प्रीयताम्।

यजमानः— ॐ भगवती सिद्धिकरी प्रीयताम्।

यजमानः— ॐ भगवती वृद्धिकरी प्रीयताम्।

यजमानः— ॐ भगवती पुष्टिकरी प्रीयताम्।

यजमानः— ॐ भगवती तुष्टिकरी प्रीयताम् ।

यजमानः— ॐ भगवन्तौ विघ्नविनायकौ प्रीयेताम् ।

यजमानः— ॐ सर्वाः कुलदेवताः प्रीयन्ताम् ।

यजमानः— ॐ सर्वा ग्रामदेवताः प्रीयन्ताम् ।

यजमानः— ॐ सर्वा इष्टदेवताः प्रीयन्ताम् ।

यजमानः— ॐ हताश्च ब्रह्मद्विष इति बहिर्निक्षिपेत् ।

यजमानः— ॐ हताश्च परिपन्थिन इत्यपि बहिरेव निक्षिपेत् ।

यजमानः— ॐ हताश्च विघ्नकर्तार इति च बहिरेव निक्षिपेत् ।

यजमानः— ॐ शत्रवः पराभवं यान्तु इत्यपि बहिरेव निक्षिपेत् ।

यजमानः— ॐ शाम्यन्तु घोराणि इति बहिरेव ।

यजमानः— ॐ शाम्यन्तु पापानि इति बहिरेव ।

यजमानः— ॐ शाम्यन्त्वीतय इति बहिरेव ।

यजमानः— ॐ शाम्यन्तूपद्रवा इति बहिरेव ।

यजमानः— ॐ शुभानि वर्द्धन्ताम् इति पात्रे ।

यजमानः— ॐ शिवा आपः सन्तु ।

यजमानः— ॐ शिवा ऋतवः सन्तु ।

यजमानः— ॐ शिवा ओषधयः सन्तु ।

यजमानः— ॐ शिवा वनस्पतयः सन्तु ।

यजमानः— ॐ शिवा अतिथयः सन्तु ।

यजमानः— ॐ शिवा अग्नयः सन्तु ।

यजमानः— ॐ शिवा आहुतयः सन्तु ।

यजमानः— ॐ अहोरात्रे शिवे स्याताम् ।

ॐ निकामे निकामे नः पर्ज्जन्यो व्वर्षतु फलव-
त्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ।

यजमानः— ॐ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतु-
सोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः
प्रीयन्ताम् ।

यजमानः— ॐ भगवान्नारायणः प्रीयताम् ।

यजमानः— ॐ भगवान् पर्ज्जन्यः प्रीयताम् ।

यजमानः— ॐ भगवान् स्वामी महासेनः प्रीयताम् ।

यजमानः— ॐ पुरोनुवाक्यया यत्पुण्यं तदस्तु ।

यजमानः— ॐ याज्यया यत्पुण्यं तदस्तु ।

यजमानः— ॐ वषट्कारेण यत्पुण्यं तदस्तु ।

यजमानः— ॐ प्रातः सूर्योदये यत्पुण्यं तदस्तु ।

यजमानः— ॐ एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये ।

ब्राह्मणाः— ॐ वाच्यताम् ।

यजमानः— ॐ ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारणम् ।

वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ।

ब्राह्मणाः— ॐ पुण्याहम् ।

नः — ॐ अस्य कर्मणः पुण्याहम्भवन्तो ब्रुवन्तु ।

ब्राह्मणाः— ॐ पुण्याहम् ।

यजमानः— ॐ अस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु

ब्राह्मणाः— ॐ पुण्याहम् ।

यजमानः— ॐ अस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु ।

ब्राह्मणाः— ॐ पुण्याहम् ।

एवमग्रेऽपि कल्याणादिप्रार्थनावसरे यजमानेन ब्राह्मणैश्च सर्वत्र त्रिस्त्रिर्वचनप्रतिवचने पठितव्ये ।

यजमानः— ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा

धियः । पुनन्तु विश्श्वा भूतानि जातवेदः

पुनीहि माम् ।

पृथिव्यामुद्धृतायान्तु यत्कल्याणं पुरा कृतम् ।

ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ।

भोब्राह्मणा मया क्रियमाणस्यास्य कर्मणः कल्याणं भवन्तो ब्रुवन्तु ।

ब्राह्मणाः— ॐ कल्याणम् ।

ॐ यथेमां व्वाचं कल्याणीमावदानि जनेभ्यः ब्रह्मराजन्याभ्या ँ शूद्राय चार्य्याय च स्वाय चारणाय च । प्रियो देवानां दक्षिणायै दातुरिह भूयासमयम्मे कामः समृद्ध्यतामुपमादो नमतु

यजमानः— सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता ।
सम्पूर्णा सुप्रभावा च ताञ्च ऋद्धिं ब्रुवन्तु नः ।

भो ब्राह्मणा मम सपरिवारस्य गृहे क्रियमाणस्यास्य कर्मण ऋद्धिं भवन्तो ब्रुवन्तु ।

ब्राह्मणाः— ॐ ऋद्ध्यताम् ।

ॐ सत्रस्य ऋद्धिरस्यगन्म ज्ज्योतिरमृताऽ अभूम दिवं पृथिव्या अद्ध्यारुहमाविदाम देवान्त्स्वज्ज्योतिः

यजमानः— स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याण-
वृद्धिदा । विनायकप्रिया नित्यं तां च स्वस्तिं

ब्रुवन्तु नः ।

भो ब्राह्मणाः मम सपरिवारस्य गृहे क्रियमाणस्य कर्मणः स्व-
स्तिं भवन्तो ब्रुवन्तु ।

ब्राह्मणाः— ॐ स्वस्ति ।

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः
पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽअरिष्ट-
नेमिः स्वस्ति नो बृहस्पतिर्दधातु ।

यजमानः— समुद्रमथनाज्जाता जगदानन्दकारिका ।
हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ।

भो ब्राह्मणा मम सकुटुम्बस्य सपरिवारस्य गृहे श्रीरस्त्विति
भवन्तो ब्रुवन्तु । ३ ।

ब्राह्मणाः— ॐ अस्तु श्रीः । ३ ।

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे
पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाण मुम्म इषाण सर्वलोकम्म इषाण ।

यजमानः— मृकण्डसूनोरायुर्यद्ध्रुवलोमशयोस्तथा ।
आयुषा तेन संयुक्ता जीवेम शरदः शतम् ।

ब्राह्मणाः— शतञ्जीवन्तु भवन्तः।

शतमिन्नु शरदोऽअन्ति देवा यत्रा न श्चक्रा
जरसन्तनूनाम्। पुत्रासो यत्र पितरो भवन्ति
मानो मद्ध्या रीरिषतायुर्गन्तोः।

यजमानः— शिवगौर्याविवाहे या या श्रीरामे नृपात्मजे।
धनदस्य गृहे या श्रीरस्माकं सा तु सद्मनि।

ब्राह्मणाः— भवतां गृहे सदा श्रीरस्तु।

ॐ मनसः काममाकूतिं व्वाचः सत्यमशीय।
पशूनां ᳪ रूपमन्नस्य रसो यशः श्रीः श्रयता-
म्मयि स्वाहा।

प्रजापतिर्लोकपालो धाता ब्रह्मा स देवराट्।
भगवाञ्छाश्वतो नित्यं स नो रक्षतु सर्वतः।

ॐ भगवान् प्रजापतिः प्रीयताम्।

ॐ प्रजापते न त्वदेतान्न्यन्यो व्विश्श्वारूपा-
णि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्त्वयम-
मुष्य पिता सावस्य पिता व्वयᳪ स्याम पतयो रयी-

णा ॐ स्वाहा ।

यजमानः— आयुष्मते स्वस्तिमते यजमानाय दाशुषे ।
श्रियै दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः ।

ब्राह्मणाः— ॐ आयुष्मते स्वस्ति ।

ॐ प्रतिपन्थामपद्महि स्वस्ति गामनेहसम् ।
येन विश्वा परिद्विषो वृणक्ति विन्दते वसु ।

ॐ स्वस्तिवाचनसमृद्धिरस्तु इति सर्वे ब्राह्मणा ब्रूयुः । ततः स्वस्तिवाचनप्रतिष्ठाफलप्राप्त्यर्थं देयद्रव्यं हस्ते कृत्वा सङ्कल्पब्राह्मणो दक्षिणां दद्यात् ।

तत्र सङ्कल्पः— ॐ अद्य कृतस्य स्वस्तिवाचनकर्मणः प्रतिष्ठासिद्ध्यर्थं सम्यक्फलावाप्तये स्वस्तिवाचकेभ्यो ब्राह्मणेभ्य इमां दक्षिणां विभज्य दातुमहमुत्सृजे इति दक्षिणां दत्वा हस्ते जलं गृहीत्वा वदेत् । अस्मिन्पुण्याह-वाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणा-नां वचनाच्छ्रीमहागणपति प्रसादाच्च सर्वः परिपूर्णोस्तु इति यजमानः प्रार्थयेत् ।

ॐ अस्तु परिपूर्ण इति ब्राह्मणा वदेयुः ।

अथाभिषेकः—

अभिषेके पत्नी वामे उपवेशनीया । अथैकस्मिन् पात्रे वरुणोदकं गृहीत्वाऽविधुराश्चत्वारो ब्राह्मणा वै दूर्वाकाण्डैः सकुटुम्बं यजमानमभिषिञ्चेयुः । अथाभिषेकमन्त्राः—

ॐ पयः पृथिव्व्यां पयऽओषधीषु पयो दिव्व्यन्तरिक्षे पयोधाः पयस्वतीः प्प्रदिशः सन्तु मह्यम् ।

ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ।

ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्ज्जनीस्स्थो व्वरुणस्यऽऋतसदन्न्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद ।

ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः पुनन्तु व्विश्श्वा भूतानि जातवेदः पुनीहि मा ।

ॐ देवस्य त्वा सवितुः प्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्ष्णो हस्ताभ्याम् । सरस्वत्यै व्वाचो यन्तुर्यन्त्रिये दधामि बृहस्प्पतेष्ट्वा साम्म्राज्ज्येनाभिषिञ्चाम्यसौ ।

ॐ देवस्य त्वा सवितुः प्प्रसवेश्श्विनो र्ब्बाहु-र्ब्भ्याम्पूष्ष्णो हस्ताब्भ्याम् । सरस्वत्यै व्वाचो यन्तु-र्य्यन्त्रेणाग्ग्नेः साम्म्राज्ज्येनाभिषिञ्चामि ।

ॐ देवस्य त्वा सवितुः प्प्रसवेऽश्श्विनो र्ब्बाहु-र्ब्भ्याम्पूष्ष्णो हस्ताब्भ्याम् । अश्श्विनो र्ब्भैषज्ज्येन तेजसे ब्ब्रह्मवर्च्चसायाभिषिञ्चामि सरस्वत्यै भैषज्ज्येन व्वीर्य्यायान्नाद्द्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण ब्बला-यश्श्रियै यशसेऽभिषिञ्चामि ।

ॐ व्विश्श्वानि देव सवितर्दुरितानि परासुव । यद् भद्द्रं तन्न आसुव ।

ॐ धामच्छदाग्निरिन्द्रो ब्ब्रह्मा देवो बृहस्पतिः सचेतसो व्विश्श्वेदेवा यज्ञम्प्रायन्तु नः शुभे ।

ॐ त्वं य्यविष्ठ दाशुषो न्हॄँ पाहि शृणुधी गिरः । रक्षा तोकमुतत्मना ।

ॐ अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः प्प्रप्प्रदातारन्तार ऊर्ज्जन्नो धेहि द्विपदे चतुष्पदे ।

पालाशं भवति तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै पालाशो ब्रह्मणैवेनमेतदभिषिञ्चति ।

ॐ द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः र्व्वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्ति र्ब्रह्म शान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि ।

अमृताभिषेकोऽस्तु । ॐ शान्तिः शान्तिः सुशान्तिः अनेन पुण्याहवाचनेन कर्मणा श्रीप्रजापतिः प्रीयतां न मम इत्युक्त्वा यजमानो हस्ते जलं गृहीत्वा कृतं कर्म ईश्वरार्पणं कुर्यात् ।

इति स्वस्तिपुण्याहवाचनम् ।



# अथ मोदादिषड्विनायकपूजनम्

गोधूमादिधान्यपुञ्जेषु मोदादिषड्विनायकावाहनम् ।

तद्यथा मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा ।

अविघ्नो विघ्नकर्ता च षडेते विघ्ननायकाः ॥ १ ॥

ॐ मोदायनमः मोदमावाहयामि स्थापयामि ॥ १ ॥

ॐ प्रमोदायनमः प्रमोदमावहयामि स्थापयामि ॥ २ ॥

ॐ सुमुखाय नमः सुमुखमावाहयामि स्थापयामि ॥ ३ ॥

ॐ दुर्मुखाय नमः दुर्मुखमावहयामि स्थापयामि ॥ ४ ॥

ॐ अविघ्नाय नमः अविघ्नमावहयामि स्थापयामि ॥ ५ ॥

ॐ विघ्नकर्त्रे नमः विघ्नकर्तारमावाहयामि स्थापयामि ॥ ६ ॥

ॐ मनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पति-र्य्यज्ञमिमन्तनोत्वरिष्टं य्यज्ञठ्ठः समिमन्दधातु ॥ व्विश्श्वेदेवासऽइह मादयन्तामो३म्प्रतिष्ठ ॥ १ ॥

ॐ भूर्भुवः स्वः मोदादिषड्विनायकाः सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य ॥

ॐ मोदादिषड्विनायकेभ्यो नमः

इति नाममन्त्रेण पाद्यादिषोडशोपचारैः सम्पूज्य हस्ते जलमादाय अनया पूजया मोदादिषड्विनायकाः प्रीयन्तान्न मम

इति षड्विनायकपूजनम्

# अथ मातृकापूजनम्

आग्नेय्यां दिशि पट्टे रक्तवस्त्रं प्रसार्य तत्र हरिद्रया षोडश कोष्ठान् कृत्वा तेषु प्रत्येकं गोधूमैस्तथा रक्ताक्षतैर्वा मातृकाः कर्तव्याः ॥ एवम्मातृकापीठं विधाय तस्मिन्मातृणामावाहनम् ॥ :

तत्रायं क्रमः ।

गौरी पद्मा शची मेधा सावित्री विजया जया ॥
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ १ ॥
हृष्टिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता ॥
गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ॥ २ ॥

ॐ गणेशाय नमः गणेशमावाहयामि स्थापयामि
भो गणपते इहागच्छ इह तिष्ठ ॥ १ ॥
ॐ गौर्य्यै नमः गौरीमावाहयामि स्थापयामि
भो गौरि इहागच्छ इह तिष्ठ ॥ २ ॥
ॐ पद्मायै नमः पद्मामावाहयामि स्थापयामि
भो पद्मे इहागच्छ इह तिष्ठ ॥ ३ ॥
ॐ शच्यै नमः शचीमावाहयामि स्थापयामि
भो शचि इहागच्छ इह तिष्ठ ॥ ४ ॥
ॐ मेधायै नमः मेधामावाहयामि स्थापयामि
भो मेधे इहागच्छ इह तिष्ठ ॥ ५ ॥
ॐ सावित्र्यै नमः सावित्रीमावाहयामि स्थापयामि
भो सावित्रि इहागच्छ इह तिष्ठ ॥ ६ ॥

ॐ विजयायै नमः विजयामावाहयामि स्थापयामि
भो विजये इहागच्छ इह तिष्ठ ॥ ७ ॥

ॐ जयायै नमः जयामावाहयामि स्थापयामि
भो जये इहागच्छ इह तिष्ठ ॥ ८ ॥

ॐ देवसेनायै नमः देवसेनामावाहयामि स्थापयामि
भो देवसेने इहागच्छ इह तिष्ठ ॥ ९ ॥

ॐ स्वधायै नमः स्वधामावाहयामि स्थापयामि
भो स्वधे इहागच्छ इह तिष्ठ ॥ १० ॥

ॐ स्वाहायै नमः स्वाहामावाहयामि स्थापयामि
भो स्वाहे इहागच्छ इह तिष्ठ ॥ ११ ॥

ॐ मातृभ्यो नमः मातृरावाहयामि स्थापयामि
भो मातर इहागच्छत इह तिष्ठत ॥ १२ ॥

ॐ लोकमातृभ्यो नमः लोकमातृरावाहयामि स्थापयामि
भो लोकमातर इहागच्छत इह तिष्ठत ॥ १३ ॥

ॐ हृष्ट्यै नमः हृष्टिमावाहयामि स्थापयामि
भो हृष्टे इहागच्छ इह तिष्ठ ॥ १४ ॥

ॐ पुष्ट्यै नमः पुष्टिमावाहयामि स्थापयामि
भो पुष्टे इहागच्छ इह तिष्ठ ॥ १५ ॥

ॐ तुष्ट्यै नमः तुष्टिमावाहयामि स्थापयामि,
भो तुष्टे इहागच्छ इह तिष्ठ ॥ १६ ॥

ॐ आत्मनः कुलदेवतायै नमः आत्मनः कुलदेवतामावाहयामि
स्थापयामि भो आत्मनः कुलदेवते इहागच्छ इह तिष्ठ ॥ १७ ॥

इत्यावाह्य । ॐ मनोजूतिरिति प्रतिष्ठाप्य ।

ॐ गणपतिगौर्य्यादिसहितषोडशमातृकाभ्यो नमः ॥

इति नाममन्त्रेण पाद्यादिमन्त्रपुष्पाञ्जल्यन्तषोडशोपचारैः सम्पूज्य प्रार्थयेत् ॥

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदार्द्रचित्ता ॥ १ ॥
याः श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तान्त्वान्नताः स्मः परिपालय देवि विश्वम् ॥ २ ॥

एवमादिभिः श्लोकैः स्तुत्वा नमस्कुर्य्यात् ।

हस्ते जलमादाय अनया पूजया गणपतिसहिता गौर्य्यादिषोडशमातरः प्रीयन्तान्न मम ॥

* इति मातृकापूजनम् *



# अथ घृतमातृकापूजनम् ।

एताः कुड्ये फलके वा सिन्दूराक्तेन घृतेन दक्षिणोत्तराः सप्त धारारूपाः कुर्यात् ॥

तत्र मन्त्रः ॐ व्वसोः पवित्रमसि शतधारं व्वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्प्वा कामधुक्षः ॥१॥

इति मन्त्रेण धारामर्धभागेन गुडेनैकीकरणम् ॥
प्रतिधारामेकैकदेवतामावाहयेत् ॥ नामानि ॥

श्रीश्च लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा सरस्वती ।
मांगल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः ॥ १ ॥

ॐ श्रियै नमः श्रियमावाहयामि स्थापयामि ॥ १ ॥
ॐ लक्ष्म्यै नमः लक्ष्मीमावाहयामि स्थापयामि ॥ २ ॥
ॐ धृत्यै नमः धृतिमावाहयामि स्थापयामि ॥ ३ ॥
ॐ मेधायै नमः मेधामावाहयामि स्थापयामि ॥ ४ ॥
ॐ पुष्ट्यै नमः पुष्टिमावाहयामि स्थापयामि ॥ ५ ॥
ॐ श्रद्धायै नमः श्रद्धामावाहयामि स्थापयामि ॥ ६ ॥
ॐ सरस्वत्यै नमः सरस्वतीमावाहयामि स्थापयामि ॥ ७ ॥
इत्यावाह्य ॥ ॐ मनोजूतिरिति प्रतिष्ठाप्य ॥

ॐ श्र्यादिघृतमातृकाभ्यो नमः इति नाममन्त्रेण षोडशोपचारैः सम्पूज्य प्रार्थयेत् ।

ॐ समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा । मामऽआयुः प्रमोषीर्मोऽअहन्तव व्वीरं विदेय तव देवि सन्दृशी ॥ १ ॥

इति सम्प्रार्थ्य हस्ते जलमादाय अनया पूजया श्र्यादिघृतमातरः प्रीयन्तान्न मम ॥

इति वसोर्धारापूजनम् ॥

अथायुष्यमन्त्राः ॥ ॐ आयुष्यं व्वर्चस्य ᳪ रायस्पोषमौद्भिदम् ॥ इद ᳪ हिरण्यं वर्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥

ॐ न तद्रक्षा ᳪ सि न पिशाचास्तरन्ति देवानामोजः प्रथम ᳪ ह्येतत् ॥ यो बिभर्त्ति दाक्षायण ᳪ हिरण्य ᳪ स देवेषु कृणुते दीर्घमायुः त मनुष्येषु कृणुते दीर्घमायुः ॥ २ ॥

यदा बध्नन्दाक्षायणा हिरण्य ᳪ शतानीकाय सुमनस्यमानाः । तन्मऽआबध्नामि शतशारदायायुष्माञ्जरदष्टिर्य्यथासम् ॥ ३ ॥

इत्यायुष्यमन्त्रजपः ॥

# अथ सांकल्पिकविधिना नान्दीश्राद्धप्रयोगः

आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे पित्र्यमन्त्रवर्जं ऋजवो दर्भाः यवैस्तिलार्थः युग्मानाशयेदत्र। केषाञ्चिन्मते दर्भार्थं दूर्वा ग्राह्या। सर्वं कर्म सव्येनैव भवति ॥

अथ कर्ता स्वासन उदङ्मुखो भूत्वा प्रागग्रांश्चतुरो दर्भवटान्निधाय संकल्पं कुर्यात् अद्यामुककर्माङ्गत्वेन सांकल्पिकविधिना ब्राह्मणयुग्मभोजनपर्याप्तान्ननिष्क्रयीभूतयथाशक्तिहिरण्येन नान्दीश्राद्धमहं करिष्ये ॥ इति संकल्प्य हस्ते जलमादाय।

ॐ सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुवःस्वः इदं वः पाद्यं पादावनेजनम्पादप्रक्षालनं वृद्धिः ॥

ॐ पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥

ॐ मातृपितामहीप्रपितामह्यो नान्दीमुख्यः भूर्भुवःस्वः इदं वः पाद्यं पादावनेजनम्पादप्रक्षालनं वृद्धिः ॥

ॐ मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखा भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनम्पादप्रक्षालनं वृद्धिः ॥

आसनदानम् ॥ ॐ सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुव स्वः इमे आसने वो नमोनमः नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः ॥

ॐ मातृपितामहीप्रपितामह्यो नान्दीमुख्यः भूर्भुवः स्वः इमे आसने वो नमोनमः नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्त्यो भवन्त्यः तथा प्राप्नुवामः

ॐ पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः स्वः इमे आसने वो नमोनमः नन्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः ॥

ॐ मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखा भूर्भुवः स्वः इमे आसने वो नमोनमः नान्दीश्राद्धेक्षणौ क्रियेतां यथा प्राप्नुवन्तो भवन्तः तथा प्राप्नुवामः ॥

ततो गंधादिदानम् ॥ ॐ सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ॥

ॐ मातृपितामहीप्रपितामह्यो नान्दीमुख्यः भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ॥

ॐ पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः स्वः इदं गंधाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ॥

ॐ मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखा भूर्भुवः स्वः इदं गंधाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः ॥

भोजननिष्क्रयदानम् ॥ हिरण्यं जलंचादाय

ॐ सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुवः स्वः इदं ब्राह्मणयुग्मभोजनपर्याप्तामान्ननिष्क्रयभूतमिदं हिरण्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ॥

ॐ मातृपितामहीप्रपितामह्या नान्दीमुख्यः भूर्भुवः स्वः इदं ब्राह्मणयुग्मभोजनपर्याप्तामान्ननिष्क्रयभूतमिदं हिरण्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ॥

ॐ पितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवः स्वः इदं ब्राह्मणयुग्मभोजनपर्याप्तामान्ननिष्क्रयभूतमिदं हिरण्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ॥

ॐ मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दी-मुखा भूर्भुवः स्वः इदं ब्राह्मणयुग्मभोजनपर्याप्तामान्ननिष्क्रयभूतं हिरण्यममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः ॥

सक्षीरयवमुदकदानम् ॥ ॐ सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखाः प्रीयन्ताम्

ॐ मातृपितामहीप्रपितामह्यो नान्दीमुख्यः प्रीयन्ताम्

ॐ पितृपितामहप्रपितामहा नान्दीमुखाः प्रीयन्ताम्

ॐ मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः प्रीयन्ताम् ॥

ॐ शिवा आपः सन्तु इति जलम्

ॐ सौमनस्यमस्तु इति पुष्पम्

ॐ अक्षतञ्चारिष्टञ्चास्तु इत्यक्षतान्

ॐ अघोराः पितरः सन्तु

इति पूर्वाग्रां जलधारां दद्यात्

ततः कृताञ्जलिः प्रार्थयेत्

ॐ गोत्रन्नो वर्धतां दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नो माऽव्यगमद्बहु देयं च नोऽस्तु अन्नं च नो बहुभवेदतिथींश्चलभेमहि याचिता-रश्च नः सन्तु मा च याचिष्म कंचन ॥

एताः सत्या आशिषः सन्तु इति यजमानो वदेत् ।

( ब्राह्मणाः ) ताः सत्या आशिषः इति दक्षिणादानम् ।

ॐ सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुवःस्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूल-( अदरख ) निष्क्रयणीं दक्षिणां दातुमहमुत्सृजे ॥

ॐ मातृपितामहीप्रपितामह्यो नान्दीमुख्यो भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयणीं दक्षिणां दातुमहमुत्सृजे ॥

ॐ पितृपितामहप्रपितामहा नान्दीमुख्या भूर्भुवः स्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयणीं दक्षिणां दातुमहमुत्सृजे ॥

ॐ मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखा भूर्भुवःस्वः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलक-यवमूलनिष्क्रयणीं दक्षिणां दातुमहमुत्सृजे ॥

ॐ उपास्मै गयता नरः पवमानायेन्दवे अभि-
देवाँऽयियक्षते ॥ इडामग्ने पुरुद ँ स ँ सनिंगोः
शश्वत्तम ँ हवमानाय साधस्यान्नः सूनुस्तनयो
विजावाग्ने साते सुमतिर्भूत्वस्मे ॥ १ ॥

यजमानः— अनेन नान्दीश्राद्धं सम्पन्नम्

ब्राह्मणाः— सुसम्पन्नम् ॥ वाजे वाजे इति विसर्जनम्

ॐ व्वाजे वाजे वत व्वाजिनो नो धनेषु व्विप्राऽ-
अमृता ऋतज्ञाः अस्यमध्वः पिवत मादयध्वं तृप्ता यात
पथिभिर्द्देवयानैः ॥

इति विसृज्य हस्ते जलं गृहीत्वा मयाचरिते सांकल्पिकनान्दी-
श्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् श्रीगण-
पतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु ॥ ब्राह्मणा अस्तु परिपूर्णः ।

इतिनान्दीश्राद्धं समाप्तम्



